पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४१ ॥

तुशब्दः पूर्वपक्षव्युदासार्थः। बादरायणस्त्वाचार्य इतः पूर्वोक्तमीश्वरमेव फलदत्वेन मनुते। कुतः। हेतुव्यपदेशात्। हेतुत्वेन श्रुतौ व्यपदेशादित्यर्थः। 'एष उ एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते, एष उ एवासाधु कर्म कारयति यमधो निनीषत' इति श्रुतौ न केवलं कर्मकारयितृत्वमुच्यते, अपि तु फलदित्सया तया तथात्वम्। अतः फलदत्वमीश्वरस्यैव व्यपदिष्टं भवतीति नानुपपत्तिः काचित्। नन्वीश्वरस्य स्वतः फलदाने समर्थस्य फलदित्सायां सत्यां कर्मकारणे को हेतुः, कार्यवैचित्र्यं च कथमित्यादिचोद्यं 'कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्य' इत्यत्र निरस्तम्। विद्वन्मण्डने श्रीविठ्ठलेन च। अतः सकामैरपि स एव भजनीयः, नान्य इति सिद्धम् ॥ ४१ ॥

इति तृतीयाध्याये द्वितीयपादे एकादशं फलमत इत्यधिकरणम् ॥ ११ ॥

इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते श्रीमद्ब्रह्मसूत्राणुभाष्ये तृतीयाध्यायस्य द्वितीयः पादः ॥ ३ ॥ २ ॥

---

भाष्यप्रकाशः।

पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥४१॥ दूषणमाशङ्क्य तत्परिहारः प्रागेवोक्त इति सारयन्ति नन्वित्यादि ॥ ४१ ॥ इत्येकादशं फलमत इत्यधिकरणम् ॥ ११ ॥

इति श्रीमद्वल्लभाचार्यचरणनखचन्द्रनिरस्तहृदयध्वान्तस्य पुरुषोत्तमस्य कृतौ भाष्यप्रकाशे तृतीयाध्यायस्य द्वितीयः पादः ॥ ३ ॥ २ ॥

रश्मिः।

पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४१ ॥ भाष्ये। पूर्वपक्षेति। प्रकाशोक्तरीत्या व्याख्यानम्। अनीश्वरजैमिनिमते पूर्वपक्षेत्यर्थः। ईश्वरमेवेति। नतु कर्म। उन्निनीषत इति। अन्यत्रोन्निनीषतीति परस्मैपदी। ईश्वरस्यैवेति। नतु कर्मणः। काचिदिति। प्रथमशास्त्रत्वेपि व्यासस्य गुरुत्वात्पूर्वपक्षीकरणेपि न काचिदनुपपत्तिः। प्रागेवेति। कृतप्रयत्नापेक्षसूत्रे। विद्वन्मण्डने चेति योगित्वम्। 'अनागतमतीतं चे'ति वाक्यात्। भाष्ये। अतः सकामैरिति। आदिममध्यमाधिकारिभिरपि। अपिनोत्तमाधिकारी। स विरुद्धधर्माश्रयः। मीमांसितत्वादेवकारः ॥ ४१ ॥ इत्येकादशं फलमत इत्यधिकरणम् ॥ ११ ॥

इति श्रीविठ्ठलेश्वरैश्वर्यनिरस्तसमस्तान्तरायेण श्रीगोविन्दरायजित्पौत्रेण संपूर्णवेत्रा विठ्ठलरायजिद्धात्रीयगोकुलोत्सवात्मजगोपेश्वरजिता कृते भाष्यप्रकाशस्य तृतीयाध्यायस्य रश्मौ तृतीयाध्यायस्य द्वितीयः पादः ॥ ३ ॥ २ ॥

इति श्रीमत्कृष्णद्वैपायनप्रणीतब्रह्मसूत्रेषु तृतीये उपनिषदां बोधकताप्रकारनिरूपके साधनाध्याये विषयाधभूतिर्नाम द्वितीयः पादः।